# अथ सप्तदशं काण्डम् ॥

( १ ) प्रथमं सूक्तम्

(१-३०) त्रिंशदृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः। आदित्यो देवता। (१) प्रथमर्चस्त्र्यवसाना षट्पदा जगती, (२-५) द्वितीयादिचतसृणां त्र्यवसाना सप्तपदातिजगती, (६-७) षष्ठीसप्तम्योस्त्र्यवसाना सप्तपदात्यष्टिः, (८) अष्टम्यास्त्र्यवसाना सप्तपदातिधृतिः, (९, १४-१५) नवमीचतुर्दशीपञ्चदशीनां पञ्चपदा शक्वरी, (१०) दशम्यास्त्र्यवसानाष्टपदा धृतिः, (११, १६) एकादशीषोडश्योस्त्र्यवसाना सप्तपदातिधृतिः, (१२) द्वादश्यास्त्र्यवसाना सप्तपदा कृतिः, (१३) त्रयोदश्यास्त्र्यवसाना सप्तपदा प्रकृतिः, (१७) सप्तदश्याः पञ्चपदा विराडतिशक्वरी, (१८) अष्टादश्यास्त्र्यवसाना सप्तपदा भुरिगष्टिः, (१९) एकोनविंश्यास्त्र्यवसाना सप्तपदात्यष्टिः, (२०) विंश्यः ककुप्, (२१) एकविंश्याश्चतुष्पदोपरिष्टाद्बृहती, (२२) द्वाविंश्या द्विपदानुष्टुप्, (२३) त्रयोविंश्या द्विपदा निचृद्बृहती, (२४) चतुर्विंश्यास्त्र्यवसाना सप्तपदा विराडत्यष्टिः, (२५-२६) पञ्चविंशीषड्विंश्योरनुष्टुप्, (२७, ३०) सप्तविंशीत्रिंश्योर्जगती, (२८-२९) अष्टाविंश्येकोनत्रिंश्योश्च त्रिष्टुप् छन्दांसि ॥

विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रमायुष्मान्भूयासम् ॥१॥
विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियो देवानां भूयासम् ॥२॥

विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । आयुष्मान् । भूयासम् ॥ १ ॥
विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । देवानाम् । भूयासम् ॥ २ ॥



**Prayer and praise to Indra and the Sun**

XVII.1.1 I invoke the resplendent Lord of praiseworthy name, full of extra-ordinary might, the withstander, the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I have a long life-span.

XVII.1.2 I invoke the resplendent Lord of praise-worthy name, full of extra-ordinary might, the withstander, the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I become dear to the enlightened ones.

विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः प्रजानां भूयासम् ॥३॥
विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः पशूनां भूयासम् ॥४॥
विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः समानानां भूयासम् ॥५॥
उदिह्युदिहि सूर्य वर्चसा माभ्युदिहि ।
द्विषंश्च मह्यं रध्यतु मा चाहं द्विषते रधं तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥६॥

विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । प्रऽजानाम् । भूयासम् ॥ ३ ॥
विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । पशूनाम् । भूयासम् ॥ ४ ॥
विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् । सहमानम् । सहःऽजितम् । स्वःऽजितम् ।
गोऽजितम् । संधनऽजितम् । ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । समानानाम् । भूयासम् ॥
उत् । इहि । उत् । इहि । सूर्य । वर्चसा । मा । अभिऽउदिहि । द्विषन् । च । मह्यम् ।
रध्यतु । मा । च । अहम् । द्विषते । रधम् । तव । इत् । विष्णो इति । बहुऽधा । वी-
र्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि ।
परमे । विऽओमन् ॥ ६ ॥



XVII.1.3 I invoke the resplendent Lord of praise-worthy name, full of extra-ordinary might, the withstander, the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I become dear to people.

XVII.1.4 I invoke the resplendent Lord of praise-worthy name, full of extra-ordinary might, the withstander, the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I become dear to animals.

XVII.1.5 I invoke the resplendent Lord of praise-worthy name, full of extra-ordinary might, the withstander,the subduer, always more powerful, the withstander, winner of might, winner of bliss, winner of kine and winner of accumulated wealth. May I become dear to my equals.

XVII.1.6 Rise O sun, rise up for me with lustre. May my hater be subjugate to me, and may I not be subjugated to my hater. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

उदिह्युदिहि सूर्य वर्चसा माभ्युदिहि ।
यांश्च पश्यामि यांश्च न तेषु मा सुमतिं कृधि तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥७॥
मा त्वा दभन्त्सलिले अप्स्वन्तर्ये पाशिन उपतिष्ठन्त्यत्र ।
हित्वाशस्तिं दिवमारुक्ष एतां स नो मृड सुमतौ ते स्याम तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥८॥
त्वं न इन्द्र महते सौभगायादब्धेभिः परि पाह्यक्तुभिस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥९॥
त्वं न इन्द्रोतिभिः शिवाभिः शंतमो भव ।
आरोहंस्त्रिदिवं दिवो गृणानः सोमपीतये प्रियधामा स्वस्तये तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१०॥

उत् । इहि । उत् । इहि । सूर्य । वर्चसा । मा । अभिऽउदिहि । यान् । च । पश्यामि ।
यान् । च । न । तेषु । मा । सुऽमतिम् । कृधि । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि ।
त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥७॥

मा । त्वा । दभन् । सलिले । अप्ऽसु । अन्तः । ये । पाशिनः । उपऽतिष्ठन्ति । अत्र ।
हित्वा । अशस्तिम् । दिवम् । आ । अरुक्षः । एताम् । सः । नः । मृड । सुऽमतौ । ते ।
स्याम । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि ।
पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ ८ ॥

त्वम् । नः । इन्द्र । महते । सौभगाय । अदब्धेभिः । परि । पाहि । अक्तुऽभिः । तव ।
इत् । विष्णो इति । बहुऽधा । वीर्याणि ।
त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥

त्वम् । नः । इन्द्र । ऊतिऽभिः । शिवाभिः । शम्ऽतमः । भव । आऽरोहन् ।
त्रिऽदिवम् । दिवः । गृणानः । सोमऽपीतये । प्रियऽधामा । स्वस्तये । तव । इत् ।
विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः ।
सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १० ॥



**XVII.1.7** Rise O sun, rise. Rise up for me with lustre. Among those, whom I see and those, whom I do not see, may you cultivate friendship for me. O pervading Lord, mainfold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.8** May they, who with nets await here within the waters, injure you in the flood. Freed from all ill-fame, may you ascend to this heaven. As such, be gracious to us. May we be in your favoured friendship. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.9** O resplendent Lord, may you protect us from all sides with your unsuppressible rays of our great happiness. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.10** O resplendent Lord, may you be most gracious to us with your propitious aids, ascending from sky to the third heaven, being praised for enjoying the devotional bliss, possessing a pleasing home for (our) well-being. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

त्वमिन्द्रासि विश्वजित्सर्ववित्पुरुहूतस्त्वमिन्द्र ।
त्वमिन्द्रेमं सुहवं स्तोममेरयस्व स नो मृड सुमतौ ते स्याम तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥११॥
अदब्धो दिवि पृथिव्यामुतासि न त आपुर्महिमानमन्तरिक्षे ।
अदब्धेन ब्रह्मणा वावृधानः स त्वं न इन्द्र दिवि षंछर्म यच्छ तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१२॥
या त इन्द्र तनूरप्सु या पृथिव्यां यान्तरग्नौ या त इन्द्र पवमाने स्वर्विदि ।
ययेन्द्र तन्वाऽन्तरिक्षं व्यापिथ तया न इन्द्र तन्वा शर्म यच्छ तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१३॥
त्वामिन्द्र ब्रह्मणा वर्धयन्तः सत्रं नि षेदुर्ऋषयो नाधमानास्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१४॥

त्वम् । इन्द्र । असि । विश्वऽजित् । सर्वऽवित् । पुरुऽहूतः । त्वम् । इन्द्र । त्वम् ।
इन्द्र । इमम् । सुऽहवम् । स्तोमम् । आ । ईरयस्व । सः । नः । मृड । सुऽमतौ । ते ।
स्याम । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि ।
पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ ११ ॥

अदब्धः । दिवि । पृथिव्याम् । उत । असि । न । ते । आपुः । महिमानम् । अन्तरिक्षे ।
अदब्धेन । ब्रह्मणा । ववृधानः । सः । त्वम् । नः । इन्द्र । दिवि । सन् । शर्म । यच्छ ।
तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्व-
ऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १२ ॥

या । ते । इन्द्र । तनूः । अप्ऽसु । या । पृथिव्याम् । या । अन्तः । अग्नौ । या । ते ।
इन्द्र । पवमाने । स्वःऽविदि । यया । इन्द्र । तन्वा । अन्तरिक्षम् । विऽआपिथ[1] । तया ।
नः । इन्द्र । तन्वा । शर्म । यच्छ । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि ।
त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥

त्वाम् । इन्द्र[1] । ब्रह्मणा । वर्धयन्तः । सत्रम् । नि । सेदुः । ऋषयः । नाधमानाः । तव ।
इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः ।
सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १४ ॥



XVII.1.11 O resplendent Lord, you are conqueror of all, cognizant of all; praised by multitude are you, O resplendent Lord. O resplendent Lord, may you urge onward this well-invoking praise-song. As such, may you be gracious to us. May we be in your favoured friendship. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

XVII.1.12 You are unimpaired in the sky and on the earth as well. They could not attain your greatness in the midspace. Flourishing with unimpaired knowledge, O resplendent Lord, as such, may you grant us peace and comfort in heaven. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

XVII.1.13 O resplendent Lord, what form of yours is there in the waters, what on the earth, what within the fire; O resplendent Lord, what (form) of yours is there in the purifying wind (or soma), granter of bliss; with what from you pervade the midspace, thereby may you bestow happiness on us. O pervading Lord, manifold, indeed are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

XVII.1.14 O resplendent Lord, exalting thee with prayer, imploring, seers have sat down (for) the holy session. O pervading Lord, manifold, indeed are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

त्वं तृतं त्वं पर्येष्युत्सं सहस्रधारं विदथं स्वर्विदं तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१५॥
त्वं रक्षसे प्रदिशश्चतस्रस्त्वं शोचिषा नभसी वि भासि ।
त्वमिमा विश्वा भुवनानु तिष्ठस ऋतस्य पन्थामन्वेषि विद्वांस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१६॥
पञ्चभिः पराङ्तपस्येकयार्वाङशस्तिमेषि सुदिने बाधमानस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१७॥
त्वमिन्द्रस्त्वं महेन्द्रस्त्वं लोकस्त्वं प्रजापतिः ।
तुभ्यं यज्ञो वि तायते तुभ्यं जुह्वति जुह्वतस्तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१८॥

त्वम् । तृतम् । त्वम् । परि । एषि । उत्सम् । सहस्रऽधारम् । विदथम् । स्वःऽविदम् । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १५ ॥

त्वम् । रक्षसे । प्रऽदिशः । चतस्रः । त्वम् । शोचिषा । नभसी इति । वि । भासि । त्वम् । इमा । विश्वा । भुवना । अनु । तिष्ठसे । ऋतस्य । पन्थाम् । अनु । एषि । विद्वान् । तव । इत् । विष्णो इति । बहुधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १६ ॥

पञ्चऽभिः । पराङ् । तपसि । एकया । अर्वाङ् । अशस्तिम् । एषि । सुऽदिने । बाधमानः । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम । मा । धेहि । परमे । विऽओमन् ॥ १७ ॥

त्वम् । इन्द्रः । त्वम् । महाऽइन्द्रः । त्वम् । लोकः । त्वम् । प्रजाऽपतिः । तुभ्यम् । यज्ञः । वि । तायते । तुभ्यम् । जुह्वति । जुह्वतः । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १८ ॥



XVII.1.15 You go to the threefold (trita), you (go) to the thousand-streamed spring, full of knowledge and attainer of bliss. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

XVII.1.16 It is you, who protect the four mid-quarters; it is you who shine up in the firmament with radiance. It is you, who rule over all these worlds. You follow the path of righteousness knowing it well. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

XVII.1.17 With five (of your powers) you heat up yonder; with one higher ward. Overpowering (all) blemish, you come on a fine day. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

XVII.1.18 You are the resplendent one; you are the great resplendent Lord; you are the beholder (lokah); you are the Lord of creatures. For you the sacrifice is arranged widely. To you the sacrificers offer oblations. O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

असति सत्प्रतिष्ठितं सति भूतं प्रतिष्ठितम् ।
भूतं ह भव्य आहितं भव्यं भूते प्रतिष्ठितं तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१९॥
शुक्रोऽसि भ्राजोऽसि । स यथा त्वं भ्राजता भ्राजोस्येवाहं भ्राजता भ्राज्यासम् ॥२०॥
रुचिरसि रोचोऽसि । स यथा त्वं रुच्या रोचोस्येवाहं
पशुभिश्च ब्राह्मणवर्चसेन च रुचिषीय ॥२१॥
उद्यते नम उदायते नम उदिताय नमः । विराजे नमः स्वराजे नमः सम्राजे नमः ॥२२॥
अस्तंयते नमोस्तमेष्यते नमोस्तमिताय नमः ।
विराजे नमः स्वराजे नमः सम्राजे नमः ॥२३॥

असति । सत् । प्रतिऽस्थितम् । सति । भूतम् । प्रतिऽस्थितम् । भूतम् । ह । भव्ये । आ-ऽहितम् । भव्यम् । भूते । प्रतिऽस्थितम् । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १९ ॥

शुक्रः । असि । भ्राजः । असि ।
सः । यथा । त्वम् । भ्राजता । भ्राजः । असि । एव । अहम् । भ्राजता । भ्राज्यासम् ॥

रुचिः । असि । रोचः । असि । सः । यथा । त्वम् । रुच्या । रोचः । असि । एव । अहम् । पशुऽभिः । च । ब्राह्मणऽवर्चसेन । च । रुचिषीय ॥ २१ ॥

उत्ऽयते । नमः । उत्ऽआयते । नमः । उत्ऽइताय । नमः ।
विऽराजे । नमः । स्वऽराजे । नमः । सम्ऽराजे । नमः ॥ २२ ॥

अस्तम्ऽयते । नमः । अस्तम्ऽएष्यते । नमः । अस्तम्ऽइताय । नमः ।
विऽराजे । नमः । स्वऽराजे । नमः । सम्ऽराजे । नमः ॥ २३ ॥



XVII.1.19 In the non-existent the existent is established; in the existent the past and the present is established; the past and the present is established in the future; the future is established in the past and the present; O pervading Lord, manifold, indeed, are your valours. May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

XVII.1.20 You are bright; you are the blaze. Just as your blazing with the blaze, so may I also blaze with the blazing.

XVII.1.21 You are brightness; you are brightener. Just as you are brightener with brightness, so may I become brightened with cattle and intellectual lustre.

XVII.1.22 Homage be to him, about to rise; homage be to the ascending one; homage be to one, that has risen up; homage be to the extremely refulgent; homage be to the self-refulgent; homage be to the absolute refulgent.

XVII.1.23 Homage be to him, about to set; homage be to the setting one; homage be to one, that has set; homage be to the extremely refulgent; homage be to the self-refulgent, homage be to the absolute refulgent.

उदगादयमादित्यो विश्वेन तपसा सह ।
सपत्नान्मह्यं रन्धयन्मा चाहं द्विषते रधं तवेद्विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥२४॥
आदित्य नावमारुक्षः शतारित्रां स्वस्तये । अहर्मात्यपीपरो रात्रिं सत्राति पारय ॥२५॥
सूर्य नावमारुक्षः शतारित्रां स्वस्तये । रात्रिं मात्यपीपरोऽहः सत्राति पारय ॥२६॥
प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च ।
जरदष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम् ॥२७॥
परीवृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च ।
मा मा प्रापन्निषवो दैव्या या मा मानुषीरवसृष्टा वधाय ॥२८॥

उत् । अगात् । अयम् । आदित्यः । विश्वेन । तपसा । सह । सऽपत्नान् । मह्यम् ।
रन्धयन् । मा । च । अहम् । द्विषते । रधम् । तव । इत् । विष्णो इति । बहुऽधा ।
वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि ।
परमे । विऽओमन् ॥ २४ ॥

आदित्य । नावम् । आ । अरुक्षः । शतऽअरित्राम् । स्वस्तये ।
अहः । मा । अति । अपीपरः । रात्रिम् । सत्रा । अति । पारय ॥ २५ ॥

सूर्य । नावम् । आ । अरुक्षः । शतऽअरित्राम् । स्वस्तये ।
रात्रिम् । मा । अति । अपीपरः । अहः । सत्रा । अति । पारय ॥ २६ ॥

प्रजाऽपतेः । आऽवृतः । ब्रह्मणा । वर्मणा । अहम् । कश्यपस्य । ज्योतिषा । वर्चसा । च ।
जरत्ऽअष्टिः । कृतऽवीर्यः । विऽहायाः । सहस्रऽआयुः । सुऽकृतः । चरेयम् ॥ २७ ॥

परिऽवृतः । ब्रह्मणा । वर्मणा । अहम् । कश्यपस्य । ज्योतिषा । वर्चसा । च । मा । मा ।
प्र । आपन् । इषवः । दैव्याः । याः । मा । मानुषीः । अवऽसृष्टाः । वधाय ॥ २८ ॥



**XVII.1.24** This Āditya (sun) has risen up with all the fiery ardour, subjugating my rivals to me; and may I not be subjugated to my hater. O pervading Lord, manifold, indeed, are your valours, May you enrich us with cattle of all sorts. May you put me in comfort and happiness in the highest heaven.

**XVII.1.25** O Āditya (sun), you have embarked upon the hundred-oared boat for (our) weal. You have brought me across to the day; in the same way, may you take me across to the night.

**XVII.1.26** O Surya (sun), you have embarked upon the hundred-oared boat for (our) weal. You have brought me across to the night; in the same way, may you take me across to the day.

**XVII.1.27** Covered with the armour of sacred knowledge of the Lord of creatures and with light and lustre of the all seeing Lord, may I move about upto the ripe old age, vigorous, energetic enjoying a thousand lives and engaged in pious deeds.

**XVII.1.28** Covered I am on all sides with the armour of sacred knowledge and with light and lustre of the all-seeing Lord. May not the arrows, that are divine, nor those, shot by human beings to kill, reach me.

ऋतेन गुप्त ऋतुभिश्च सर्वैर्भूतेन गुप्तो भव्येन चाहम् ।
मा मा प्रापत्पाप्मा मोत मृत्युरन्तर्दधेहं सलिलेन वाचः ॥२९॥
अग्निर्मा गोप्ता परि पातु विश्वत उद्यन्त्सूर्यो नुदतां मृत्युपाशान् ।
व्युच्छन्तीरुषसः पर्वता ध्रुवाः सहस्रं प्राणा मय्या यतन्ताम् ॥३०॥

ऋतेन । गुप्तः । ऋतुऽभिः । च । सर्वैः । भूतेन । गुप्तः । भव्येन । च । अहम् । मा । मा । प्र ।
आपत् । पाप्मा । मा । उत । मृत्युः । अन्तः । दधे । अहम् । सलिलेन । वाचः ॥२९॥
अग्निः । मा । गोप्ता । परि । पातु । विश्वतः । उत्ऽयन् । सूर्यः । नुदताम् । मृत्युऽपाशान् ।
विऽउच्छन्तीः । उषसः । पर्वताः । ध्रुवाः । सहस्रम् । प्राणाः । मयि । आ । यतन्ताम् ॥ ३० ॥

॥ इति सप्तदशं काण्डम् ॥

[ सूक्तम् १, ऋचः ३० ]



XVII.1.29 Protected (I am) by righteousness and by all the seasons, protected by the past and present and by the future I am. May not the evil approach me, nor the death. I conceal myself with the flood of speech.

XVII.1.30 May the protector fire divine protect me from all sides. May the rising sun push away the fetters of death. May the dawns shining brightly and mountains firmly set, infuse a thousand vital breaths into me.

---

**Here ends Kāṇḍa XVII**
**Hymn 1, Verses 30**

---